# चतुर्दशस्सर्गः

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् |
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः || 5.14.1||

स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः |
पुष्पिताग्रान्  वसन्तादौ ददर्श विविधान् द्रुमान् || 5.14.2||

सालानशोकान् भव्यांश्च चम्पकांश्च सुपुष्पितान् |
उद्दालकान् नागवृक्षांश्चूतान् कपिमुखानपि || 5.14.3||

तथाऽऽम्रवणसञ्छन्नांल्लताशतसमन्वितान् |
ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् || 5.14.4||

स प्रविष्य विचित्रां तां विहगैरभिनादिताम् |
राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् || 5.14.5||

विहगैर्मृगसंघैश्च विचित्रां चित्रकाननाम् |
उदितादित्यसङ्काशां ददर्श हनुमान् बली || 5.14.6||

वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः |
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् || 5.14.7||

प्रहृष्टमनुजां काले मृगपक्षिमदाकुलाम् |
मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् || 5.14.8||

मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् |
सुखप्रसुप्तान् विहगान् बोधयामास वानरः || 5.14.9||

उत्पतद्भिर्द्विजगणैः पक्षैर्वातैः समाहताः |
अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः || 5.14.10||

पुष्पावकीर्णः शुशुभे हनुमान् मारुतात्मजः |
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः || 5.14.11||

दिशः सर्वाभिधावन्तं वृक्षखण्डगतं कपिम् |
दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे || 5.14.12||

वृक्षेभ्यः पतितैः पुष्पैरवकीर्णाः पृथग्विधैः |
रराज वसुधा तत्र प्रमदेव विभूषिता || 5.14.13||

तरस्विना ते तरवस्तरसा बहु कम्पिताः |
कुसुमानि विचित्राणि ससृजुः कपिना तदा || 5.14.14||

निर्धूतपत्रशिखराः शीर्णपुष्पफलद्रुमाः |
निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः || 5.14.15||

हनूमता वेगवता कम्पितास्ते नगोत्तमाः |
पुष्पपर्णफलान्याशु मुमुचुः फलशालिनः || 5.14.16||

विहङ्गसंघैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः |
बभूवुरगमाः सर्वे मारुतेन विनिर्धुताः || 5.14.17||

विधूतकेशी युवतिर्यथा मृदितवर्णिका |
निपीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता || 5.14.18||

तथा लाङ्गूलहस्तैस्तु चरणाभ्यां च मर्दिता |
तथैवाशोकवनिका प्रभग्नवनपादपा || 5.14.19||

महालतानां दामानि व्यधमत् तरसा कपिः |
यथा प्रावृषि वेगेन मेघजालानि मारुतः || 5.14.20||

स तत्र मणिभूमीश्च राजतीश्च मनोरमाः |
तथा काञ्चनभूमीश्च विचरन् ददृशे कपिः || 5.14.21||

वापीश्च विविधाकाराः पूर्णाः परमवारिणा |
महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः || 5.14.22||

मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः |
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः || 5.14.23||

बुद्धपद्मोत्पलवनाश्चक्रवाकोपशोभिताः |
नत्यूहरुतसंघुष्टा हंससारसनादिताः || 5.14.24||

दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः |
अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः || 5.14.25||

लताशतैरवतताः सन्तानकुसुमावृताः |
नानागुल्मावृतवनाः करवीरकृतान्तराः || 5.14.26||

ततोऽम्बुधरसङ्काशं प्रवृद्धशिखरं गिरिम् |
विचित्रकूटं कूटैश्च सर्वतः परिवारितम् || 5.14.27||

शिलागृहैरवततं नानावृक्षसमावृतम् |
ददर्श कपिशार्दूलो रम्यं जगति पर्वतम् || 5.14.28||

ददर्श च नगात् तस्मान्नदीं निपतितां कपिः |
अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् || 5.14.29||

जले निपतिताग्रैश्च पादपैरुपशोभिताम् |
वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः || 5.14.30||

पुनरावृत्ततोयां च ददर्श स महाकपिः |
प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् || 5.14.31||

तस्यादूरात् स पद्मिन्यो नानाद्विजगणायुताः |
ददर्श कपिशार्दूलो हनुमान् मारुतात्मजः || 5.14.32||

कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा |
मणिप्रवरसोपानां मुक्तासिकतशोभिताम् || 5.14.33||

विविधैर्मृगसंघैश्च विचित्रां चित्रकाननाम् |
प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा || 5.14.34||

काननैः कृत्रिमैश्चापि सर्वतः समलङ्कृताम् |
ये के चित् पादपास्तत्र पुष्पोपगफलोपगाः || 5.14.35||

सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः |
लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् || 5.14.36||

काञ्चनीं शिंशुपामेकां ददर्श स महाकपिः |
वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः || 5.14.37||

सोऽपश्यद् भूमिभागांश्च नगप्रस्रवणानि च |
सुवर्णवृक्षानपरान् ददर्श शिखिसंनिभान् || 5.14.38||

तेषां द्रुमाणां प्रभया मेरोरिव महाकपिः |
अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः || 5.14.39||

तान् काञ्चनान् वृक्षगणान् मारुतेन प्रकम्पितान् |
किङ्किणीशतनिर्घोषान् दृष्ट्वा विस्मयमागमत् || 5.14.40||

सुपुष्पिताग्रान् रुचिरांस्तरुणाङ्कुरपल्लवान् |
तामारुह्य महावेगः शिंशपां पर्णसंवृताम् || 5.14.41||

इतो द्रक्ष्यामि वैदेहीं राम दर्शनलालसाम् |
इतश्चेतश्च दुःखार्तां सम्पतन्तीं यदृच्छया || 5.14.42||

अशोकवनिका चेयं दृढं रम्या दुरात्मनः |
चम्पकैश्चन्दनैश्चापि बकुलैश्च विभूषिता || 5.14.43||

इयं च नलिनी रम्या द्विजसंघनिषेविता |
इमां सा राममहिषी नूनमेष्यति जानकी || 5.14.44||

सा रामा राममहिषी राघवस्य प्रिया सती |
वनसञ्चारकुशला ध्रुवमेष्यति जानकी || 5.14.45||

अथवा मृगशावाक्षी वनस्यास्य विचक्षणा |
वनमेष्यति साद्येह रामचिन्तासुकर्शिता || 5.14.46||

रामशोकाभिसन्तप्ता सा देवी वामलोचना |
वनवासरता नित्यमेष्यते वनचारिणी || 5.14.47||

वनेचराणां सततं नूनं स्पृहयते पुरा |
रामस्य दयिता चार्या जनकस्य सुता सती || 5.14.48||

सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी |
नदीं चेमां शुभजलां सन्ध्यार्थे वरवर्णिनी || 5.14.49||

तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा |
शुभायाः पार्थिवेन्द्रस्य पत्नी रामस्य सम्मता || 5.14.50||

यदि जीवति सा देवी ताराधिपनिभानना |
आगमिष्यति सावश्यमिमां शीतजलां नदीम् || 5.14.51||

एवं तु मत्वा हनुमान् महात्मा  प्रतीक्षमाणो मनुजेन्द्रपत्नीम् |
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः || 5.14.52||

## इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्दशस्सर्गः।